## अथ तृतीयोऽङ्कः ।

[ततः प्रविश्य]

**कञ्चुकी —** [आत्मनो दशामनुसन्धाय]

रुन्धानया बहुमुखीं गतिमिन्द्रियाणां
वध्वेव गाढमनया जरयोपगूढः ।
अङ्गेन वेपथुमता च जडेन चाहं
गन्तुं पदादपि पदं *गामितुं न चालम् ॥ १ ॥

हन्त विश्वासो नु प्रभूणामाश्वासमुत्पादयाति ।

लक्ष्येषु पाणिपरिवेषमवेक्ष्य तेषु
श्वासावधि त्रिचतुरेषु पदेषु यानम् ।
मैत्री गिरां श्रवसि तारतरश्रुतीनां
देवी तथापि हितकर्मणि मां नियुङ्क्ते ॥ २ ॥

अद्य खलु विदर्भराजनन्दनया सबहुमानमेवमाख्यातोऽस्मि । 'आर्य बभ्रुमुख! पुरा किल कालयवनविजयाय गच्छता आर्यपुत्रेण सङ्कल्पितमासीद् 'भगवति! भवानि! [1] रैवतककन्दरकदम्बवनवासिनि! प्रतिनिवर्तनानन्तरमेव मया निखिलपुरन्ध्रिजनानुयातदेवीजनेन तव यात्रामहोत्सवः कारयितव्य इति । तदद्य वयमितो रैवतकमुपसरामः । कुवलयावली पुनरुद्यानविलोकनायासेन बलवदस्वस्थशरीरेति गृह एव चन्द्रलेखया समं निवेशिता । सेयं यथा न

---

1. 'रैवतककन्दरकदम्बवासिनि!' ख. पाठः.

---

* ण्यजन्तात् तुमुनीदं रूपम् ।

बहिरङ्कणमासादयति तथा त्वया रक्षितव्ये'ति । तदवहितो देवीनिदेशमनुतिष्ठामि ।

[ ततः प्रविशति कुवलयावली चन्द्रलेखा च । ]

**चन्द्रलेखा**—(क) हळा ! मुद्दिआविरहेण अकअपंचाळिआभमं तुमं एसो ण आणादि । तां एहि णिक्कंपाओ विळासुज्जाणं गच्छामो ।

**कञ्चुकी**—[सपाणिपरिवेषं विलोक्य] भोः ! कयोरयं पदशब्दः ।

**चन्द्रलेखा**—(ख) अय्य ! चंदळेहा खु अहं । इअं उण इंदीवराळीणामआ अण्णा संचारिआ किं वि रहस्सं कहऊण भट्टिणीए पेसिदा । ता एदं भट्टिणो संमुहं वाचेमि । तुमं कुवळआवळीए घरद्दुवारं ओहिदो रक्खेहि ।

**कञ्चुकी**—भद्रे ! गम्यतां सिद्धये शीघ्रमागम्यतां च । अहमवहितो भवामि । [इति निष्क्रान्तः]

**चन्द्रलेखा**—(ग) हळा ! वंचिदो खु एसो ठविरसोविदळ्ळो ।

---

क. हला ! मुद्रिकाविरहेणाकृतपाञ्चालिकाभ्रमां त्वामेष न जानाति । तदेहि निष्कम्पे विलासोद्यानं गच्छावः ।

ख. आर्य ! चन्द्रलेखा खल्वहम् । इयं पुनरिन्दीवरालीनामिकान्या सञ्चारिका किमपि रहस्यं कथयित्वा भट्टिन्या प्रेषिता । तदेतत् भर्तुः सम्मुखं वाचयामि । त्वं कुवलयावल्या गृहद्वारमवहितो रक्ष ।

ग. हला ! वञ्चितः खल्वेष स्थविरसौविदल्लः ।

**कुवलयावली**—[आत्मगतम्] (क) ण आणे कहं एसो अणुसओ (अद्धिवो?) वंचिदव्वो त्ति। [प्रकाशम्] हळा किअद्दूरे कदळिआघरं।

**चन्द्रलेखा**—(ख) इदं खु। पविसदु पिअसही। दिग्घिआए तरंगसीअरपरिब्भीअसीअळे चंदसिळाअळे उपविसामो।

[उभे तथाकुरुतः।]

**कुवलयावली**—(ग) हळा! बळिअं खु संदाववंति मह अंगाइं।

**चन्द्रलेखा**—(घ) सहि! [1]सुहणिमित्तं। इह एव्व पच्छाअसीअळे तुज्झ संदावो समिस्सदि।

[ततः प्रविशति नायकः।]

**नायकः**—[मदनावस्थां नाटयन्] कथमभिसन्धीयते पटुधियापि मया धृतेरभिसन्धिपरिपन्थी मन्मथः।

---

क. न जाने कथमेषोऽनुशयो वञ्चयितव्य इति। हला! कियद्दूरे कदलिकागृहम्।

ख. इदं खलु। प्रविशतु प्रियसखी। दीर्घिकायास्तरङ्गशीकरपरिभ्रमशीतले चन्द्रशिलातले उपविशावः।

ग. हला! बलवत् खलु सन्तापवन्ति ममाङ्गानि।

घ. सखि! शुभनिमित्तम्। इहैव प्रच्छायशीतले तव सन्तापः शमिष्यति।

---

1. 'सुलणिमित्तं' ख. पाठः.

जयतितरां रतिजानेरनुभावो निखिलधीरपरिभावी ।
[1]यदसजितापि रणन्ती बाणानन्विष्य शिञ्जिनी भ्रमति ॥ ३॥

[साशंसनम्]

उत्फुल्लगण्डयुगमुद्गतमन्दहास-
मुद्वेलरागमुररीकृतकामतन्त्रम् ।
हस्तेन हस्तमवलम्ब्य कदानु सेवे
सल्लापरूपममृतं सरसीरुहाक्ष्याः ॥ ४ ॥

कथं चिरायति श्रीवत्सः ।

[प्रविश्य विदूषकः ।]

**विदूषकः**—[सहर्षम्] (क) अज्ज जोगमायामहूसवावदेसेण सअळो वि णअरीसीमंतिणीजणो देवीहिं समं पट्ठाविदो । ता मह मंतप्पहावं पिअसहं णिवेदेमि । [परिक्रम्य] वड्ढदु पिअवअस्सो ।

**नायकः**—[साकूतस्मितम्] अपि सखे! फलितस्तव निधानसाधने मन्त्रप्रयोगः ।

**विदूषकः**—(ख) भो मंतबळेण णिक्कासिदे देवीपण्णईळोए सो णिहि केण वि दूसंदेसेण पिआएण दाणिं

---

क. अद्य योगमायामहोत्सवापदेशेन सकलोऽपि नगरीसीमन्तिनीजनो देवीभिः समं प्रस्थापितः । तन्मम मन्त्रप्रभावं प्रियसखं निवेदयामि । वर्धतां प्रियवयस्यः ।

ख. भोः! मन्त्रबलेन निष्कासिते देवीपन्नगीलोके स निधिः

---

1. 'यदसन्निधितापि' ख. पाठः ।

रक्खिज्जइ । रुप्पिणी बह्हुमुहं कुवळआवळीरक्खणे णि-उज्जेइ ।

नायकः—सोऽयं सामदानाभ्यामभेदनीयो विश्वासी सौविदल्लः ।

श्रीवत्सः—(क) सो खु अहिआरी, तं वि सुणुअमुहेण सावराहं काऊण काराघरंमि किं णिवेसेमि ।

नायकः—शान्तं पापं शान्तं पापम् । धिङ् मूर्ख ! परमाप्तजने पापमाशङ्कसे ।

श्रीवत्सः—(ख) ता सो चिरं सुखी होदु ।

नायकः—इमामातपवेलां कदलिकागृहेऽतिवाह्य रज-नीमुखे समुचितमुपायमाचरामः ।

श्रीवत्सः—(ग) भो इदं उज्जाणं ।

[प्रवेशं नाटयतः ।]

राजा—

राजत्कोरककण्टका मधुकरीझङ्कारहुंकारिणी-
रालोलस्तबकस्तनीरविरलानुन्नप्रवालाधराः ।

---

केनापि दुस्सन्दर्शेन पिशाचेनेदानीं रक्ष्यते । रुक्मिणी बभ्रुमुखं कुवलयावली-रक्षणे नियोजयति ।

क. स खल्वधिकारी, तमपि शून्यमुखेन सापराधं कृत्वा कारागृहे किं निवेशयामि ।

ख. तत् स चिरं सुखी भवतु ।

ग. भोः ! इदमुद्यानम् ।

आलिङ्गन्ति लतावधूरतितरामानम्रशाखाकरै-
    रत्यारूढरसा रसालरसिकाः कान्ते वसन्तोत्सवे ॥५॥

**श्रीवत्सः**—(क) भो! किं फळं वसंतप्पसंसाए । सव्वसमअपट्टबंधो पाउरसमओ पसंसीअदु ।

**नायकः**— कथय कथमेतावानुत्कर्षो वर्षाणाम् ।

**श्रीवत्सः**—(ख) जं तत्थ कण्णरसाअणाणिमंतक्खरो णासिआरसाअणपाकगंधो जीहारसाअणपदत्थवित्थरो बम्हणाणं कप्परुक्खसरूवो होइ अपरपक्खो ।

**नायकः**—साधु कुक्षिम्भर! साधु ।

**श्रीवत्सः**— (ग) भो! पेच्छ सअळकरणग्गामहेअरं सोभग्गं सिंगारवणस्स ।

**नायकः**— [सार्धाङ्गीकारम्]

इतो भृङ्गीगीतं विहरणमितो मन्दमरुता-
    मितो वल्लीलास्यं परिचितिरितः पुष्परजसाम् ।
अतो भूतं तृप्तैरितरकरणैर्हन्त रसना
    पुनस्तस्या बिम्बाधरमधु विना शुष्यति मम ॥६॥

---

क. भोः! किं फलं वसन्तप्रशंसया । सर्वसमयपट्टबन्धः प्रावृट्समयः प्रशस्यताम् ।

ख. यत् तत्र कर्णरसायननिमन्त्राक्षरो नासिकारसायनपाकगन्धो जिह्वारसायनपदार्थविस्तरो ब्राह्मणानां कल्पवृक्षसरूपो भवत्यपरपक्षः ।

ग. भोः! पश्य सकलकरणग्रामहृद्यं सौभाग्यं शृङ्गारवनस्य ।

**श्रीवत्सः**— (क) भो इयं खु विअसिदारविंदसुंदरमअरंदणीसंदपरिसे(स ? अ)गरुअचक्कवाअउळपक्खविक्खेवकंपंतकुवळअवळआमोदमेदुरमंदमारुआ विळासुज्जाणदिग्घिआ ।

**नायकः**— अत्र खलु ।

रक्ताब्जसैकतावर्तरथाङ्गयुगलोत्पलैः ।
स्थितमेकत्र तद्गात्रतुलाभ्रष्टाधिकारिभिः ॥ ७ ॥

**कुवलयावली**— (ख) हळा दहइ मे अंगेसु जरठादवेण संदावो ।

**चन्द्रलेखा**—(ग) बहळदररसाळासप्पच्छाअसीअळे कुदो इमंमि पवेसो आदवस्स ।

**श्रीवत्सः**— [आकर्ण्य निरूप्य] (घ) भो इअं खु चन्दळेहादुदीआ कुवळआवळी ।

**नायकः**— [सानुरागसम्भ्रमम्] सखे ! श्रीवत्स !

कासौ दृशोरमृतवर्त्तिरतर्कणीया
कानन्दसिद्धिघुटिका निरुपाधिसिद्धा ।

---

क. भोः इयं खलु विकसितारविन्दसुन्दरमकरन्दनिष्यन्दपरिषेकगुरुकचक्रवाककुलपक्षविक्षेपकम्पमानकुवलयवलयामोदमेदुरमन्दमारुता विलासोद्यानदीर्घिका ।

ख. हला ! दहति मेऽङ्गेषु जरठातपेन सन्तापः ।

ग. बहलतररसालाशाप्रच्छायशीतले कुतोऽस्मिन् प्रवेश आतपस्य ।

घ. भोः ! इयं खलु चन्द्रलेखाद्वितीया कुवलयावली ।

क्काकल्पनापरिणता नवकल्पवल्ली
क्कानक्षरा वसति मोहनमूलविद्या ॥ ८ ॥

**श्रीवत्सः**— (क) इदं खु कदलिआघरम् ।

**नायकः**— [विलोक्य]

इयमनिलचलितकदलीदलेषु परिलक्षिता च पिहिता च ।
उत्कण्ठयति मनो मे रतिरिव विश्लेषसंश्लेषैः ॥ ९ ॥

सखे! प्रसङ्गमुपगम्य यथावसरमुपसरावः ।

**श्रीवत्सः**— (ख) भो! भो! जाणे संगमादो वि पेम्मपरिक्खणं सुहअरं त्ति ।

**नायकः**— सखे! परमानन्दसर्वस्वं सर्वमुदाहरसि ।

अन्तर्हितो निगदितानि मनोरमायाः
श्रृण्वन् मुहूर्तमपि भावनिवेदनानि ।
प्रायेण नन्दति यथा न तथा कृतात्मा
वर्षान् सहस्रमपि केवलमेलनेन ॥ १० ॥

[उभौ लतान्तर्हितौ तिष्ठतः]

**श्रीवत्सः**— (ग) भो! पेच्छ इमाए वेसेणेव्व संदावो सव्वक्खरं आचक्खीअदि ।

क. इदं खलु कदलिकागृहम् ।

ख. भो भो! जाने सङ्गमादपि प्रेमपरीक्षणं सुखकरमिति ।

ग. भो! पश्यास्या वेषेणैव सन्तापः सर्वाक्षरमाख्यायते ।

नायकः— सखे! सम्यगुपलक्षितं भवता ।

आकल्पैरतिसान्द्रचन्द्रघुटिकाप्रायैस्तनोस्तर्पणं
श्रीगन्धद्रवलेपनेन कुचयोरत्यन्तमालेपनम् ।
लीलातामरसोदरेण करयोरक्ष्णोश्च संवाहनं
प्रेयस्याः प्रकटीकरोति विषमां हा हन्त तापव्यथाम् ॥

कुवलयावली— (क) संदावकारणं कदळिआघरं संदावणिवारणं त्ति अळीअं मंतेसि ।

[चन्द्रलेखा नवकदलीदलैरेनां छादयन्ती वीजयति ।]

कुवलयावली— (ख) हळा! पुडमं कप्पूरेण धूविदं मअणाणळं दाणिं किंति कदळीदलाणिळेहिं पज्जाळिअं करेसि।

[इति तान्यपक्षिपति]

चन्द्रलेखा—[आत्मगतम्] (ग) हन्त मअणसंदावो समुद्दीविदो एदाए । [प्रकाशम्] (घ) हळा! अहीरा खु तुमं ।

कुवलयावली— (ङ) हळा! तस्स अह्माणं भट्टिणो दंसणादो पहुदि कुकूळग्गिमग्गं विअ समग्गवेअणं अप्पाणं धारेंति वि मं अहीरेत्ति कहं वाहरासि ।

---

क. सन्तापकारणं कदलिकागृहं सन्तापनिवारणमित्यलीकं मन्त्रयसि ।

ख. हला! प्रथमं कर्पूरेण धूपितं मदनानलमिदानीं किमिति कदलीदलानिलैः प्रज्वलितं करोषि ।

ग. हन्त! मदनसन्तापः समुद्दीपित एतस्याः । हला! अधीरा खलु त्वम् ।

घ. हला! अधीरा खलु त्वम् ।

ङ. हला! तस्यास्माकं भर्तुर्दर्शनात् प्रभृति कुकूलाग्निमग्नमिव समग्रवेदनमात्मानं धारयन्तीमपि मामधीरेति कथं व्याहरसि ।

**श्रीवत्सः—** (क) भो वअस्स ! किं सुदं एदं ।

**नायकः—** सखे ! शब्दग्राहिणा फलितमस्मत्करणेन ।

आकर्णितानि ननु कर्णरसायनानि
सख्याः पुरो निगदितान्यतिवत्सलायाः ।
एतानि तानि वचनानि मनोरमाया
भावानुबन्धपिशुनान्यपकैतवानि ॥ १२ ॥

**चन्द्रलेखा—** (ख) हळा ! तुह अणुमदिं विणा भट्टारअं आणेदुं आसंकेमि ।

**कुवलयावली—** [आत्मगतम्] (ग)

कळकंठो विसकंठो होदु पवाळो वि दिग्घकरवाळो ।
चंदो वि विसणिसंदो जुळंतदहणो पडीरागिरिपवणो
[॥ १३ ॥
रइवइणा कुविदेण वि मरणादो उवरि किं णु कादव्वं ।
पिअसहि ! सिलाहणिज्जं णहि णहि ळंघेमि कण्णआ-
[समअं ॥ १४ ॥

**श्रीवत्सः—** (घ) साहु मणस्सिणि ! साहु ।

---

क. भो वयस्य ! किं श्रुतमेतत् ।

ख. हला ! तवानुमतिं विना भट्टारकमानेतुमाशङ्के ।

ग. कलकण्ठो विषकण्ठो भवतु प्रवालोऽपि दीर्घकरवालः ।
चन्द्रोऽपि विषनिष्यन्दो ज्वलद्दहनः पाटीरगिरिपवनः ॥
रतिपतिना कुपितेनापि मरणादुपरि किन्नु कर्तव्यम् ।
प्रियसखि ! श्लाघनीयं नहि नहि लङ्घयामि कन्यकासमयम् ॥

घ. साधु मनस्विनि ! साधु ।

**चन्द्रलेखा**— [आत्मगतम्] (क) आसासपसंगंतरेण एदं विह्मरिदवेअणं दाव करेमि। [प्रकाशम्] हळा! उह्णं उह्णेण संमइ त्ति भट्टिणो संदावेण तुह संदावो संमइ।

**कुवलयावली**— (ख) हळा! भट्टिणो संदावो त्ति अळीअपिअजव्विदेण मं आसासेसिं।

**चन्द्रलेखा** — (ग) हळा! सच्चं एदं। सवामि पिअसहीए।

**कुवलयावली** — (घ) [सहर्षगद्गदम्] हळा! तुह केण आचक्खिदं।

**चन्द्रलेखा** — (ङ) णं देवीहिं समं कादव्वस्स अवदीमहूसवगमणस्स अंतराएण. तुह णिरूढराअस्स भट्टिणो-अदक्खिण्णेण।

**श्रीवत्सः** — [सहसोपसृत्य] (च) इमिणा अ पुडमं तह वणळुळाअमंसळेण दाणिं पिअवअस्सचिन्ताए एव्वं परिक्खीणेण सिरिवच्छेण बंह्मणेण।

क. आश्वासप्रसङ्गान्तरेणैतां विस्मृतवेदनां तावत् करोमि। हला! उष्णमुष्णेन शाम्यतीति भर्तुः सन्तापेन तव सन्तापः शाम्यति।

ख. हला! भर्तुः सन्ताप इत्यलीकप्रियजल्पितेन मामाश्वासयसि।

ग. हला! सत्यमेतत्। शपे प्रियसख्यै।

घ. हला! तव केनाख्यातम्।

ङ. ननु देवीभिः समं कर्तव्यस्य भगवतीमहोत्सवगमनस्यान्तरायेण तव निरूढरागस्य भर्तुरदाक्षिण्येन।

च. अनेन च प्रथमं तथा वनलुलायमांसलेनेदानीं प्रियवयस्यचिन्तयैवं परिक्षीणेन श्रीवत्सेन ब्राह्मणेन।

**कुवलयावली** — [ससाध्वसकम्पम्] (क) अह्मो माणुसीए भणइ वाणरो वाआए ।

**चन्द्रलेखा** — [जनान्तिकम्] (ख) हळा! मा एव्वं भण। भट्टिणो खु पिअवअस्सो एसो । [आत्मगतम्] भट्टा वि सण्णिहिदो भवे । होदु, एव्वं दाव । [प्रकाशम्] भो दुट्ठबंह्मण! ईरिसाइ अदक्खिणाइ उपदिसंदं तुमं देवीए सण्णिहिं णइस्सं । [इति शिखायां गृह्णाति।]

**श्रीवत्सः** — (ग) अविहा अविहा ।

**नायकः** — नूनं मदुपवरणायैव संविहितमेवं विदग्धया चन्द्रलेखया । तदुपसर्पामि[1] । सखे! न भेतव्यं न भेतव्यम् ।

**चन्द्रलेखा** — [श्रीवत्सं विसृज्य] (घ) जेउ जेउ भट्टा ।

(कुवलयावली सशृङ्गारसाध्वसम् उत्थातुं प्रयतते ।)

**नायकः** — [बलादेनां निवारयन्] नहि वयमिदानीमुपचरणीयाः । किन्त्वस्माभिरेव,

---

क. अहो! मानुष्या भणति वानरो वाचा ।

ख. हला! मैवं भण । भर्तुः खलु प्रियवयस्य एषः । भर्तापि सन्निहितो भवेत् । भवतु, एवं तावत्, भोः! दुष्टब्राह्मण! ईदृशान्यदाक्षिणान्युपदिशन्तं त्वां देव्याः सन्निधिं नेष्यामि ।

ग. अविहा अविहा ।

घ. जयतु जयतु भर्ता ।

---

१. 'सत्वरमुपसर्पामि' क. पाठः.

अभिनवबिसकाण्डपेलवं
तदनु पयोधरभारभङ्गुरम् ।
तदुपरि परितापनिस्सहं
परिचरणीयमिदं तवाङ्गकम् ॥ १५ ॥

चन्द्रलेखा — (क) अकिदासणपरिग्गहे भट्टारअंमि कहं पिअसही उवविसदि । ता सिणिद्धसीअळसिळेक्कदेसं णं अळंकरेदु महाराओ ।

नायकः — यदभिरुचितं प्रियवयस्यायै । [इत्युपविशति]

[कुवलयावली साङ्गसङ्कोचा सखीं सासूयमवलोकयन्ती पुनरुत्तिष्ठति ।]

नायकः — [तामुत्तरीये निगृह्य]

करभोरु! विपुलजघने!
तनुमध्ये! निम्ननाभि! निबिडकुचे! ।
कलकण्ठि! कमलवदने!
चकितचकोराक्षि! किं प्रयासेन ॥ १६ ॥

[इति पुनरपि निवेशयति]

श्रीवत्सः — [स्वगतम्] (ख) हन्त पक्खवाअउत्तिणो रण्णो सण्णिहाणे ठाउं ण जोग्गं । जेण सिट्ठबह्मणेक्कविद्देसिणी दुट्ठदासिआ पिअसहित्ति संभाविज्जइ । किंअ ताए एव्व उवदेसो अणुचिट्ठीअदि । [इति ससम्भ्रम(मु? म)पसरति ।]

---

क. अकृतासनपरिग्रहे भट्टारके कथं प्रियसख्युपविशति । तद् स्निग्धशीतकशिलैकदेशं नन्वलङ्करोतु महाराजः ।

ख. हन्त! पक्षपातवर्तिनो राज्ञः सन्निधाने स्थातुं न योग्यम् । येन शिष्टब्राह्मणैकविद्वेषिणी दुष्टदासिका प्रियसखीति सम्भाव्यते । किञ्च तस्या एवोपदेश अनुष्ठीयते ।

चन्द्रलेखा—(क) तदभिप्पआहि भो सिट्ठबह्मण ! मे अक्खमेसु अविणअक्कमेसु । [इत्यनुसरति] ।

श्रीवत्सः—(ख) हंडे ! रच्छारदे ! एहिएहि । देवीए सच्चभामाए एव्व संमु(हि ? हं) आळेच्छामि । [इति शिखां मुहुर्निबध्नन् निष्क्रान्तः]

चन्द्रलेखा—(ग) अय्य ! सिरिवच्छ ! पसीदेत्ति । [तमनु निर्गच्छति ।]

कुवलयावली—(घ) हळा ! तुमं वि किं मं परिच्चअसि । [इत्यनुयातुमुत्तिष्ठति ।]

नायकः—प्रिये कुवलयावलि !

दत्तासि घर्मकणिकाजलधारया मे
कामेन लोकगुरुणा करुणाकरेण ।
पश्यावयोरपि परस्परागबन्धे
रागाग्निरेव भगवानयमादिसाक्षी ॥ १७ ॥

इति चिबुके मुखमुन्नमयति ।

कुवलयावली—[मुखमाकृष्य] (ङ) भो ! मा तुमं ळघूकरेहि जणेसु ।

---

क. तदभिप्रयाहि भो शिष्टब्राह्मण ! मेऽक्षमेष्वविनयक्रमेषु ।

ख. हण्डे ! रथ्यारते ! एह्येहि । देव्याः सत्यभामाया एव सम्मुखमालक्षयामि ।

ग. आर्य ! श्रीवत्स ! प्रसीदेति ।

घ. हला ! त्वमपि किं मां परित्यजसि ।

ङ. भो ! मा त्वं लघूकुरुष्व जनेषु ।

[ततः प्रविशति सत्यभामा चतुरिका च ।]

**सत्यभामा —** [ससौभाग्यगर्वम्] (क) हळा ! चउरिए !
परिअरबळेण जं जं अळं जुजं तं (त)दण्णवेसादो ।
(णववेसा) सुरअंता होंति (हि) रुइअसुरंआरंभा(?) ॥१८॥

**चतुरिका —** (ख) भट्टिणि ! ण खु सव्वापि इत्थिआ सच्चभामा ण खु सव्वो वि पुरुसो पुरुसोत्तमो ।

**सत्यभामा —** [सादरस्मितम्] (ग) हळा ! कदलिआघर-समीवम्मि अय्यउत्तो दिट्ठो त्ति कए आचक्खिदं ।

**चतुरिका —** (घ) भट्टिणि ! विळासुज्जाणपालिआए क-ळकंठिआए ।

**सत्यभामा —** (ङ) हळा ! अविण्णादा पसंगंतरेण पविट्ठा अळीअरोसच्छळेण भट्टिणा केळिस्सं ।

**चतुरिका —** (च) इदं खु विळासुज्जाणं ।

[उभे प्रविशतः ।]

---

क. हला ! चतुरिके !
परिकरबलेन यद्यदलं युतं तत तदन्यवेषात् ।
(नववेषाः) सुरतान्ता भवन्ति (हि) रुचितसुरतारम्भाः (?) ॥

ख. भट्टिनि ! न खलु सर्वापि स्त्री सत्यभामा, सर्वोऽपि पुरुषः पुरुषोत्तमः ।

ग. हला ! कदलिकागृहसमीपं आर्यपुत्रो दृष्ट इति कयाख्यातम् ।

घ. भट्टिनि ! विलासोद्यानपालिकया कलकण्ठिकया ।

ङ. हला ! अविज्ञाता प्रसङ्गान्तरेण प्रविष्टालीकरोषच्छलेन भर्त्रा क्रीडिष्यामि ।

च. इदं खलु विलासोद्यानम् ।

**चतुरिका** — (क) भट्टिणि! पेच्छसो अज्जस्स कए उ वळंमि तुह पदक्कमणे भट्टारआवराहे केसळकण्णुप्पळेण रइदा सिक्खा।

**सत्यभामा** — [सस्मितम्] (ख) ता अपुरुवं खु कदळिआघरं।

**चतुरिका** — (ग) अअं खु भट्टिणो समाळावो सुणीअदि।

**सत्यभामा** — (घ) ता अणाळक्खिदा आअण्णेमि पसंगं। [तथा कृत्वा, उभे कुवलयावलीं विलोकयतः।]

**चतुरिका** — (ङ) भट्टिणि! किं वि एत्थ अण्णव्व वट्टदि।

**सत्यभामा** — (च) हळा! अविस्ससणिज्जो खु एसो

**नायकः** — [सानुनयम्]

विटपवती किसलयिनी मञ्जरिता तन्वि! तनुलता सेयम्।
फलमिदमाकटाक्षं तत् (?) मामनुजानीहि किं विलम्बेन
[॥ १९ ॥

[इति मुखमुन्नमयति।]

---

क. भट्टिनि! प्रेयस आर्यस्य कृते तु बलात् तव पदक्रमणे भट्टारकापराधे केसरकर्णोत्पलेन रचिता शिक्षा।

ख. तदपूर्वं खलु कदलिकागृहम्।

ग. अयं खलु भर्तुः समालापः श्रूयते।

घ. तदनालक्षिताकर्णयामि प्रसङ्गम्।

ङ. भट्टिनि! किमप्यत्रान्यदिव वर्तते।

च. हला! अविश्वसनीयः खल्वेषः।

**कुवलयावली** — (क) भो ! मुंच अविणअं रक्खेहि ।

**सत्यभामा** — [सहसोपसृत्य] (ख) भो दारिए ! कण्ण-आकामुअस्स इमस्स महाराअस्स अणुणअं काऊण तुमं विणअं रक्खेहि ।

**नायकः** — [साशङ्कं नायिकां विसृजति ।]

**कुवलयावली** — [सभयमपसरन्ती लतान्तरिता दिशोऽवलोकयति ।]

[प्रविश्य]

**चन्द्रलेखा** — [सखीमालिङ्ग्य] (ग) कित्ति तुह तणु-लदा वेवइ ।

**कुवलयावली** — [कथञ्चिद् प्रकृतिमुपगम्य] (घ) हळा ! सच्चभामाए दिट्ठचावळह्मि ।

**चन्द्रलेखा** — [सशङ्कम्] (ङ) कुदो खु इअं आगदा अणब्भवज्जविट्ठी । ता एहि अब्भन्तरं गच्छामो । [इति सखीं हस्ते गृहीत्वा निष्क्रान्ता ।]

**नायकः** — [साञ्जलिपुटम्]

आगो नास्तीति वचो बाधितमस्तीति दासतानुचितम् ।
पापीति सिद्धसाधनमधुना देवी प्रमाणमौचित्ये ॥ २० ॥

---

क. भो ! मुञ्चाविनयं रक्ष ।

ख. भो दारिके ! कन्यकाकामुकस्यास्य महाराजस्यानुनयं कृत्वा त्वं विनयं रक्ष ।

ग. किमिति तव तनुलता वेपते ।

घ. हला ! सत्यभामया दृष्टचापलास्मि ।

ङ. कुतः खल्वियमागतानभ्रवज्रवृष्टिः । तदेह्यभ्यन्तरं गच्छावः ।

**सत्यभामा** — (क) महाराअस्स ओसरं अजाणिअ विस्संभभंगकारिणी अहं अ उइदकम्मं ण जाणामि ।

**नायकः** — [आत्मगतम्] हन्त श्रीवत्सोऽपि नात्र सन्निहितः ।

[प्रविश्य]

**श्रीवत्सः** — [सनिर्वेदम्] (ख) अह्मो मंदबुद्धिणो विह्मरणसीळत्तणं मज्झ । जं णतक्कि(?)किसळअत्तिदहदएण देट्ठग्गुळिअवेअणा सच्चभामा जोगमाआमहूसवस्स ण गदे त्ति णो (णि)वेदिदं पिअसहस्स । सो वि मत्तो कण्णआविस्संभं करेइ । अहं गदुअ अप्पमोदं उवदिसामि । [परिक्रम्य, सत्यभामां विलोक्य सशङ्कम्] अह्मो विस्संभविग्घकारिणी सा पुडमं एव्व एत्थ सण्णाहिदा । ता इदो एव्व शणै चिट्ठामि ।

**नायकः** — [सत्यभामां हस्ते गृहीत्वा]

सापराधे च दण्ड्ये च पुरतो मयि तिष्ठति ।
प्रभवन्त्यपि किं रोषं विधत्से धीरमानसे ! ॥ २१ ॥

क. महाराजस्यावसरमज्ञात्वा विस्रम्भभङ्गकारिण्यहं चोचितकर्म न जानामि ।

ख. अहो मन्दबुद्धेर्विस्मरणशीलत्वं मम । यद् .... किसलयस्थितहतकेन दष्टाङ्गुलिकवेदना सत्यभामा योगमायामहोत्सवस्य न गतेति नो निवेदितं प्रियसखस्य । सोऽपि मत्तः कन्यकाविस्रम्भं करोति । अहं गत्वाप्रमोदमुपदिशामि । अहो विस्रम्भविघ्नकारिणी सा प्रथममेवात्र सन्निहिता । तदित एव शनैस्तिष्ठामि ।

अथवा श्रूयताम्—

बद्धे भ्रूयुगले विभङ्गकुटिलं बद्धोऽस्मि वेगोत्थितै-
 [1]निःश्वासैरभिताडितेऽधरपुटे सन्ताडितोऽस्मि प्रिये! ।
कल्हारेऽरुणया दृशा श्रुतिसखे रुद्धे निरुद्धोऽस्मि मां
 जानीथास्तव दण्डितं परुषया सख्येव कोपश्रिया ॥२२॥

[इति पादयोः पतितुमिच्छति ।]

**सत्यभामा**—[हस्तमाकृष्य सपरिजना निष्क्रान्ता ।]

**नायकः**— [सदैन्यनिःश्वासम्] नियतौ प्रातिकूलायां किन्नु पौरुषेण । तथाहि—

नास्वादितं तदधरामृतमन्तिकस्थं
 देव्याः कृतो मनसि विप्रियवज्रलेपः ।
सेयं सपत्नजनहस्तगता च मुग्धा
 कष्टं पुरः स्फुरति कल्मषकर्मपाकः ॥ २३ ॥

**श्रीवत्सः**— [शनैः शनैरुचि-न्नुपसृत्य] (क) भो वअस्स! जम्मणक्खत्तोपसग्गादो विमुक्क ह्म ।

**नायकः**— सखे! महोत्सवप्रतिनिवृत्ता देवी प्रसङ्गमिममाकर्ण्य कियत् पीडयिष्यति तव प्रियसखीमिति पर्याकुलोऽस्मि ।

---

क. भो वयस्य! जन्मनक्षत्रोपसर्गाद् विमुक्ताः स्मः ।

१. 'निःश्वासैरपि ताडिते' क. पाठः.

**श्रीवत्सः**—(क) भो वअस्स ! भवंतं भाविणं अ(णं ? णु) भवं(तेण) एव्व परिहरणिज्जेत्ति णिवेदे(दि ? मि) णो अण्णो त्ति । ता एहि सच्चभामं अणुस(रामि ? रह्म) ।

**नायकः**—एवमेव करणीयमिदानीम् ।

**श्रीवत्सः**—(ख) इदो इदो पिअवअस्सो ।

**नायकः**—[सस्मरणम् आकाशे लक्ष्यं बद्ध्वा] अयि ! प्रिये ! कुवलयावलि ! तथा खलु

कण्टककलिकान्वितया
तरलितया तव लताङ्गि ! तनुलतया ।
निष्कण्टकमिव मन्ये
मम राज्यं भागधेयानाम् ॥ २४ ॥

[इति सवयस्यो निष्क्रान्तः ।]

तृतीयोऽङ्कः ॥

---

क. भो वयस्य ! भवन्तं भाविनमनुभवतैव परिहरणीयेति निवेदयामि नान्यदिति । तदेहि सत्यभामामनुसरावः ।

ख. इत इतः प्रियवयस्यः ।

## अथ चतुर्थोऽङ्कः ।

[ततः प्रविशति परिचारिकाद्वयम्]

**एका** — (क) हळा! कत्थूरिए! देवी जोगमाआमहूसवादो जदो पडिणिवुत्ता तदो पहुदि अकारणं वि परिअणं(?) कुप्पइ, किं काळणम् ।

**कस्तूरिका** — (ख) हळा घणसारिए! णं चदुरिआमुहादो देवीए पडिण्णाविदो कदळीघरंमि भट्टिणो वुत्तंतो ।

**घनसारिका** — (ग) जुज्जइ । अह कुवळआवळीए को वुत्तंतो ।

**कस्तूरिका** — (घ) सा खु महेसिणा पुणो वि तवोवणं णीदेत्ति पवादं कदुअ अह्मारिसजणस्स दुग्गमंमि सत्तच्छदपासाअसुरंगाघरअंमि ठाविदा कुळक्कमागदेण विस्सासिणा माहवउळपरिअणेण सद्दो रक्खिज्जइ ।

क. हला! कस्तूरिके! देवी योगमायामहोत्सवाद् यतः प्रतिनिवृत्ता ततः प्रभृत्यकारणमपि परिजनाय कुप्यति, किं कारणम् ।

ख. हला! घनसारिके! ननु चतुरिकामुखाद् देव्यै प्रतिज्ञापितः कदलीगृहे भर्तुर्वृत्तान्तः ।

ग. युज्यते । अथ कुवलयावल्याः को वृत्तान्तः ।

घ. सा खलु महर्षिणा पुनरपि तपोवनं नीतेति प्रवादं कृत्वास्मादृशजनस्य दुर्गमे सप्तच्छदप्रासादसुरङ्गागृहे स्थापिता कुलक्रमागतेन विश्वासिना माधवकुलपरिजनेन सद्यो रक्ष्यते ।

**घनसारिका**—(क) पुरा खु एव्वंसीळा ण होइ देवी। दाणिं खु सच्चभामाए उवदेसेण दीहकोवणा अदिस्ससीला अ सव्वुत्ता । तह गुणदोसा अ संसग्गदो संकमंति त्ति ।

**कस्तूरिका**—(ख) हळा! महादेविं रुक्खिणिं ळोअमहिळासामण्णं मण्णिअ किं एव्वं भणासि ।

**घनसारिका**—(ग) हळा! सअळमहिळासिळाहणिज्जस्स बंधुजणविसज्जिदस्स दाक्खिण्णणिहिणो तारिसस्स कण्णआरअणस्स ईरिसं णिरोहं करेइ त्ति उम्मणाअमाणा एव्वं भणामि ।

**कस्तूरिका**—(घ) किं तुमं ण आणासि कुवळआवळीए उवरि देवी एव्व णिव्विसेसं सिणेहं करेइ । किंतु दाणिं सवत्तिआजणदक्खिणं दुवारिकरिअ तस्स पडिण्णासआ-

क. पुरा खल्वेवंशीला न भवति देवी । इदानीं खलु सत्यभामाया उपदेशेन दीर्घकोपनादृश्यशीला च संवृत्ता । तथा गुणदोषाश्च संसर्गतः सङ्क्रामन्तीति ।

ख. हला! महादेवीं रुक्मिणीं लोकमहिलासामान्यं मत्वा किमेवं भणसि ।

ग. हला! सकलमहिलाश्लाघनीयस्य वन्धुजनविसर्जितस्य दाक्षिण्यनिधेस्तादृशस्य कन्यकारत्नस्येदृशं निरोधं करोतीत्युन्मनायमानैवं भणामि ।

घ. किं त्वं न जानासि कुवलयावल्या उपरि देव्येव निर्विशेषं स्नेहं करोति । किन्त्विदानीं सपत्नीजनदाक्षिण्यं द्वारीकृत्य तस्य प्रतिन्यास-

रिणो महेसिणो सा वि सज्झसेण तं कण्णअं अदिप्पआसेण ढक्केइ ।

घनसारिका—(क) हळा! जइ महेसी अणुमण्णेइ ता कुवळआवळीए मणोरहो फळिस्सदि त्ति णं तुमं जाणासि ।

कस्तूरिका—(ख) को एत्थ संसओ।

घनसारिका — [सानुकम्पम्] (ग) सा दक्खिण्णणिहो दुक्खसीळा णिव्वुदा होदु ।

कस्तूरिका—(घ) तुए सुदं भट्टिणो को णु वुत्तंतो त्ति ।

घनसारिका—(ङ) हळा जहा बब्भुमुहादो आअण्णिदं तह णिवेदेमि । [संस्कृतमाश्रित्य]

आस्ते पीठे क्षणमिव बहिर्मन्त्रिवृद्धानुरोधाद्
धत्ते हेलां परिजनवचोविक्रियासु क्रियासु ।
नेच्छत्यन्तःपुरपरिचयं राजकार्यापदेशात्
तस्याः प्रेम्णा तरळितधृतिश्चक्रवर्ती यदूनाम् ॥ १ ॥

---

कारिणो महर्षेः सापि साध्वसेन तां कन्यकामतिप्रयासेन छादयति ।

क. हला! यदि महर्षिरनुमन्यते तर्हि कुवलयावल्या मनोरथः फलिष्यतीति ननु त्वं जानासि ।

ख. कोऽत्र संशयः ।

ग. सा दाक्षिण्यनिधिर्दुःखशीला निर्वृता भवतु ।

घ. त्वया श्रुतं भर्तुः को नु वृत्तान्त इति ।

ङ. हला! यथा बभ्रुमुखादाकर्णितं तथा निवेदयामि ।

**कस्तूरिका** — [हस्तमुरसि कृत्वा] (क) अहो बलिअं खु पेम्मबंधो भट्टारअस्स।

* [विलोक्य] (ख) हळा! एसो खु अंतेउरपरिअणो इदो तदो णिळीअ णिक्कंपो होइ। ता देविं उवच्छंदेदुं आअदो भट्टेत्ति आसंकेमि।

**कस्तूरिका** — (ग) ता एहि देवीसमीवं गच्छामो।

[इति निष्क्रान्ते।]

[प्रवेशकः।]

[ततः प्रविशति नायको विदूषकश्च।]

**नायकः** — [सानुरागनिर्वेदम्।]

अद्य श्वो भविता समागम इति प्रेमोत्तरं ताम्यतो-
रत्यन्ते विजने कुतश्चन मुहुर्विश्लिष्यतोर्विघ्नतः।
वैक्लव्यं वहतोः सुहृज्जनसमाश्वासैकजीवाशयो-
र्यूनोर्नूनमियं मनोरथमयी माया महायासिका॥ २॥

**श्रीवत्सः** — (घ) भो वअस्स कत्थूरिआए णासे वि णाहिचम्म ण मुंचेसि। जं णारएण णीदाए कुवळआवळीए तुह चित्तस्य उक्कंठभरो तारिसो एव्व।

---

क. अहो बलवान् खलु प्रेमबन्धो भट्टारकस्य।

ख. हला! एष खल्वन्तःपुरपरिजन इतस्ततो निलीय निष्कम्पो भवति। तद् देवीमुपच्छन्दयितुमागतो भर्तेत्याशङ्के।

ग. तदेहि देवीसमीपं गच्छावः।

घ. भो वयस्य! कस्तूरिकाया नाशेऽपि नाभिचर्म न मुञ्चसि। यद् नारदेन नीतायां कुवलयावल्यां तव चित्तस्योत्कण्ठाभरस्तादृश एव।

---

* इदं वनसारिकाया वचनं प्रतिभाति।

**रुक्मिणी**— [विलोक्य सगद्गदम्] (क) अय्यउत्त! परित्ताएहि परित्ताएहि ।

**नायकः**—[सादरमुपसृत्य] अयि विदर्भराजनन्दने! महादेवि!

मयि त्रातरि पातालभूतलस्वर्गवासिनाम् ।
तवाज्ञाकरतां प्राप्ते कुतस्ते भीतिरागता ॥ ४ ॥

[रुक्मिणी व्याहर्तुमिच्छति । व्रीडावैलक्षण्यमभिनीय सखीमवलोकयति ।]

**सुगन्धिका** — (ख) भट्टारअ! सत्तच्छदप्पासादअळिंदे कुवळआवळी केण वि अणाळेक्खिदेण गेहिदेत्ति वाउळा देवी ।

**नायकः**—भो प्रिये! किमेतावतापि परिभ्रान्तासि । सेयं कन्यका तव समीप इति चेतासि समाधीयतामाश्वासः ।

[नेपथ्ये]

भो भो द्वारवतीवासिभिर्वीरम्मन्यैः पुरुषपलालैः श्रूयतामयं कालयवनसोदरस्य मे वीरस्यालापः —

अम्भोजिनीमिव मदावलदन्तलग्नां
मद्बाहुपञ्जरगतां मदिरायताक्षीम् ।
यस्त्रातुमिच्छति मदेन यदोः प्रसूतौ
सोऽयं समेतु यदि वा सकलाः समेताः ॥ ५ ॥

**नायकः**—अहो गर्वग्रन्थिबन्धुरं वचनमनात्मवेदिनः कालपाशवशवर्तिनो दानवस्य ।

---

क. आर्यपुत्र! परित्रायस्व परित्रायस्व ।

ख. भट्टारक! सप्तच्छदप्रासादालिन्दे कुवलयावली केनाप्यनालक्षितेन गृहीतेति व्याकुला देवी ।

**श्रीवत्सः**— (क) भो पिअवअस्सस्स देवीसंरक्खणे अहं सज्जिदो होमि। तुमं माआविरक्खसं अप्पमत्तो वाबा-देहि ।

**रुक्मिणी** — (ख) हळा! गच्छ तुमं अय्यसच्चव(माहा? म्मा)णं णिवेदेदुं अय्यउत्तस्य ववसाअं ।

**नायकः**— अयि प्रिये! किं न वीरसमरसमयज्ञासि । यदेकाकिनि विरोधिनि यदुवीरसन्नाहमादिशासि । पश्य

सिद्धार्थखण्डनविधौ कति वज्रधारा
योज्या भवन्ति परिकूटितशैलकूटाः ।
चण्डाः पतन्ति कति वा करिकुम्भकूट-
पाटच्चरा हरिपतेर्मशके चपेटाः ॥ ६ ॥

[इति ससंरम्भं परिक्रामन् सुदर्शनानुध्यानपरिग्रहणप्रयोगानभिनीय साशङ्कमवलोकयन्]

चक्रं विलोक्य चटुलाशनिघोरधारं
खड्गं दधाति सहखेटमसौ निशाटः ।

[सशङ्काविषादम्]

अस्यांसतो विकटवल्लवने सिताङ्गी
हा हन्त हन्त पततीयमराळकेशी ॥ ७ ॥

क. भो प्रियवयस्यस्य देवीसंरक्षणेऽहं सज्जो भवामि । त्वं मायाविराक्षसमप्रमत्तो व्यापादय ।

ख. हला! गच्छ त्वमार्यसत्यवर्माणं निवेदयितुमार्यपुत्रस्य व्यवसायम् ।

तदेनां गगनभाग एव समालम्ब्य विह्वलां तरळतनुतरतरङ्गशीकरशिशिरगन्धवाहे विलासवनदीर्घिकातटे मन्दमवतारयामि । [इति निष्क्रान्तः ।]

**रुक्मिणी —** (क) अय्य! सिरिवच्छ! माआविणो दाणवा। एआई गदो अय्यउत्तो। ण आणामि किण्णु सोदव्वं त्ति ।

**श्रीवत्सः —** (ख) देवि! सोहणं एव्व सुणीअदि ।

[प्रविश्य नारदः]

**नारदः —** [सहर्षम्]

आह्वापरोदयमुपोषितयोर्ममाक्ष्णो-
रस्मिन् महीमवतरत्यधुना मुकुन्दे ।
आश्चर्यदायिरणदश्च न पारणानां
प्राप्तैरजीर्णिरजनिष्ट जनिष्यते च ॥ ८ ॥

[विलोक्य] इमामेव पुरस्कृत्य शेषं सम्पादयामि । [उपसृत्य] महादेवि! वर्धसे पत्युर्विजयेन । श्रूयताम् —

सुराः सप्ताब्धिपूराभं य(दै ? मै)क्षन्त महोदरम् ।
चक्रधाराग्निना सर्पिर्बिन्दुशोषं स शोषितः ॥ ९ ॥

**रुक्मिणी —** [ससम्भ्रमहर्षं नारदस्य पादयोः प्रणम्य] (ग) भअवदो पसादेण उज्जीविदह्मि ।

---

क. आर्य! श्रीवत्स! मायाविनो दानवाः । एकाकी गत आर्यपुत्रः । न जानामि किन्नु श्रोतव्यमिति ।

ख. देवि! शोभनम् एव श्रूयते ।

ग. भगवतः प्रसादेनोज्जीवितास्मि ।

**श्रीवत्सः** — [स्वोत्तरीयं वीजयन्] (क) ही ही णिज्जिदं पिअवअस्सेण । फळिदं अह्माणं भाअहेएण [इति नर्तित्वा सविनयम्] भअवं! सिरिवच्छो सअण्णपंसं दुवे वारे तुज्झ सिरिचरणे अहिवादेइ ।

**नारदः** — [सस्मितम्] एवमेव मुदितो भूयाः ।

**रुक्मिणी** — (ख) भअवं किं अक्खदसरीरा वा मे वच्छा कुवळआवळी ।

**नारदः** — देवि! यस्यामेवं तवादरो निसर्गसिद्धस्तस्याः किमुच्यते कुशलसम्पात्तिः ।

**रुक्मिणी** — (ग) दाणिं खु मे पुण्णं संपुण्णं । [परिजनं विलोक्य] तुह्मे गच्छह अय्यउत्तस्स मंगळणीराअण-संपादणस्स ।

**परिजनः** — (घ) तहे त्ति । [निष्क्रान्तः ।]

**सुगन्धिका** — (ङ) भअवं दाणिं कहिं भट्टा ।

**नारदः** — अयं खलु विह्वलां कुवलयावलीमाश्वासयन् दीर्घिकातटे तिष्ठति ।

---

क. ही!! ही!! निर्जितं प्रियवयस्येन । फलितमस्माकं भागधेयेन भगवन्! श्रीवत्सः सकर्णस्पर्शं द्वे वारे तव श्रीचरणावभिवादयति ।

ख. भगवन्! किमक्षतशरीरा वा मे वत्सा कुवलयावली ।

ग. इदानीं खलु मे पुण्यं सम्पूर्णम् । यूयं गच्छतार्यपुत्रस्य मङ्गल-नीराजनसम्पादनाय ।

घ. तथेति ।

ङ. भगवन्! इदानीं कुत्र भर्ता ।

**सुगन्धिका**— (क) भअवं! किं एत्थ गच्छामो।

**नारदः** — यदभिरुचितं महादेव्यै। [परिक्रामति।]

**नारदः** — [आत्मगतम्] अयमेवावसरो देव्यै दिव्यस्यास्य निवेदनाय। [प्रकाशम्] पुत्रि वैदर्भि! किमपि निवेदयितुमिच्छामि।

**रुक्मिणी** — (ख) भअवं आणवेहि।

**नारदः** — [जनान्तिकम्]

जानासि लक्ष्मि! भगवच्चरणारविन्द-
सेवासखीं वसुमतीं भगिनीं पुरा ते।
सैवाधुना त्वमिव देवहिताय धात्रा
सम्प्रार्थिता कुवलयावलिराविरासीत्॥ १०॥

**रुक्मिणी** — [आत्मगतम्] (ग) किण्णु एत्थ भअवदो जुत्तं उत्तरं होदु। [प्रकाशम्] हळा! तुमं णिवेदेहि सच्चवादिणीणं भइणिआणं। जं महोवआरिणो अय्यउत्तस्स कंठे वि उवआरं पडिअरेमि। एत्थ तुह्मेहिं अणुमदी कादव्वेत्ति।

**सुगन्धिका** — (घ) जं देवी आणवेदि त्ति। [निष्क्रान्ता।]

---

क. भगवन्! किमत्र गच्छामः।

ख. भगवन्! आज्ञापय।

ग. किन्वत्र भगवतो युक्तमुत्तरं भवतु। हला! त्वं निवेदय सत्यवादिनीनां भगिनिकानाम्। यन्महोपकारिण आर्यपुत्रस्य कण्ठेऽपि उपहारं प्रतिकरोमि। अत्र युष्माभिरनुमतिः कर्तव्येति।

घ. यद् देव्याज्ञापयतीति।

**नारदः**—साधु कल्याणशीले! साधु।

कृतोपकारेषु जनेषु देहिना-
मकुर्वतां प्रत्युपकारमादरात्।
किमिन्द्रसम्पत्तिविशेषया श्रिया
किमायुषा कल्पशतानुवर्तिना॥ ११॥

[ततः प्रविशति विह्वला कुवलयावली निषण्णो नायकश्च।]

**नायकः**—कथमिदानीमपि न समाश्वसिति मे प्राणवल्लभा। तदेनां कमलदलानीतशिशिरजलसेचनेन समाश्वासयामि। [इति किञ्चिदन्तरं परिक्रामति। समाकर्ण्य सहर्षम्।] हन्तेयं स्वयमेव समाश्वस्ता किमपि मन्त्रयते। तदनालक्षितोऽहमाकर्णयामि। [तथा करोति।]

**कुवलयावली**—(क) [परितो विलोक्य] अह्मो इदं तं एव्व उज्जाणं। [विचिन्त्य] जाव को वि अण्णो ण पेक्खइ ताव इमाए दिग्घिआए णिमज्जिऊण अप्पाणं वावादेमि। [इति शनैरुत्थाय दीर्घिकामुपसरति।]

**नायकः**—

परस्परानुरागाय वासनास्थायिने नमः।
यस्मिन् प्राणपरित्यागदशाप्युल्लासकारिणी॥ १२॥

[इत्यनुपरिक्रामति।]

---

क. इदं तदेवोद्यानम्। यावत् कोऽप्यन्यो न पश्यति तावदस्यां दीर्घिकायां निमज्ज्यात्मानं व्यापादयामि।

हातुं ग्रहीतुमपि नेच्छति चक्रवाकी
दत्तं मयाधरमिव त्वमधीरनेत्रे! ॥ १८ ॥

कुवलयावली — (क) सो वि एको धुत्तो ।

नायकः— प्रिये! किमहमपरो धूर्तः ।

श्रीवत्सः— [सोच्चैःस्वरम्] (ख) इदो इदो देवी ।

नायकः— [समाकर्ण्य आत्मगतम्] कथं वयस्यो निवेदयति संज्ञया देवीसमागमनम् । [प्रकाशम्] कोऽत्र भोः निवेद्यतां प्रत्याहृता कुवलयावलीति ।

देवी— [उपसृत्य सहर्षम्] (ग) जेउ जेउ अय्यउत्तो ।

नायकः—[सादरम्] महादेवि! त्वदादेशादियं मया प्रत्याहृता दारिका ।

रुक्मिणी— [लज्जमानां कुवलयावलीमालिङ्ग्य] (घ) भइणिए! तुए दुईआ अक्खदसरीराए ळोअवादादो विमुक्क ह्मि ।

नायकः— कथमत्रैव भगवान् नारदः । भगवन्! अभिवादये ।

नारदः— [सहर्षातिरेकम्]

स्वस्ति श्रीवासुदेवाय स्वस्ति दानवघातिने ।
स्वस्ति मङ्गलमूलाय स्वस्ति कारुण्यशालिने ॥ १९ ॥

---

क. सोऽप्येको धूर्तः ।

ख. इत इतो देवी ।

ग. जयतु जयत्वार्यपुत्रः ।

घ. भगिनिके! त्वया द्वितीया अक्षतशरीरया लोकवादाद् विमुक्तास्मि ।

**श्रीवत्सः**— (क) वड्ढदि पिअवअस्सो देवीए चित्त-समाराहणेण ।

**नायकः**— [सस्मितम्] कथं प्रियवयस्यः ।

**रुक्मिणी**— (ख) भइणिए ! वंदेहि भअवंतं ।

**कुवलयावली**— [विलोक्य] (ग) हंत सो एसो भअवं तादणारदो ।

[प्रणम्याश्रु विमुञ्चति ।]

**नारदः**— पुत्रि ! जगत्कण्टकोद्धरणहेतुतया लोकोपकारिणीं त्वां विलोक्य कृतार्थोऽस्मि ।

[प्रविश्य]

**सुगन्धिका**— (घ) देवि ! सअलो वि भट्टिणीजणो विण्णवेदि। अज्जाए कज्जसमाळोअणेण संतोसिद म्हि । जह महादेवीए रोअदि तह करीअदु त्ति ।

**रुक्मिणी**— [जनान्तिकम्] (ङ) भअवं ! समप्पेमि कुवळआवळिं अय्यउत्तस्स ।

**नारदः**— त्वमस्याः प्रभवसीति पुरैव निवेदितमस्माभिः ।

---

क. वर्धते प्रियवयस्यो देव्याश्चित्तसमाराधनेन ।

ख. भगिनिके ! वन्दस्व भगवन्तम् ।

ग. हन्त ! स एष भगवान् तातनारदः ।

घ. देवि ! सकलोऽपि भट्टिनीजनो विज्ञापयति — आर्यायाः कार्यसमालोचनेन संतोषितोऽस्मि । यथा महादेव्यै रोचते तथा क्रियतामिति ।

ङ. भगवन् ! समर्पयामि कुवलयावलीमार्यपुत्रस्य ।

रुक्मिणी—(क) अज्जउत्त! जइ अहं तुज्झ माणणिज्जा ता इअं तुए अह्मणिव्विसेसं दट्ठव्वा। [इति नायिकाहस्तं नायकस्य हस्ते समर्पयति।]

नायकः—

हन्त सममेव निहिते कुवलयदृशा कराम्बुजे प्रिययोः।
घनसारगन्धसारौ मिळिताविव तापमपनयतः॥ २०॥

नारदः—[सबहुमानम्] देव! निखिलश्रेयोनिदानमविचारेण करणीयो देव्या निदेशः।

नायकः—यदादिशति भगवान्। [इति कुवलयावल्याः करं गृह्णाति]

[सर्वे हर्षं नाटयन्ति।]

श्रीवत्सः—(ख) सुळग्गं होदु।

नारदः—तदेतदेकयैव त्वया निर्व्यूढं यदुपदिष्टमस्माभिः।

व्रतानि वर्णनीयानि सन्त्वन्यानि सहस्रशः।
परं व्रतं पुरन्ध्रीणां पतिचित्तानुरञ्जनम्॥ २१॥

इति।

[आकाशे दुन्दुभिध्वनिः।]

नारदः—देव! भवतः कुवलयावलीकल्याणमभिनन्दतां देवानामयमानन्दविलासः।

---

क. आर्यपुत्र! यद्यहं तव माननीया तहींयं त्वयास्मन्निर्विशेषं द्रष्टव्या।

ख. सुलग्नं भवतु।

**नायकः**— [सप्रश्रयं नारदं प्रणम्य] भगवन्! त्वत्प्रसादेन देवीप्रसादेन च कति कति वा श्रेयांसि न मामनुबध्नन्ति। [सहर्षोत्कर्षम्]

रम्या वागिव सुप्रसादमधुरा देवीमणी रुक्मिणी
सन्मानार्थ इवात्युदारगरिमा स त्वं परिद्योतसे।
कन्येयं करवल्लरीव विलसत्यन्योन्यमैत्रीक्रमो
युष्माकं भुवि मादृशान् सहृदयानानन्दयन्नेधताम्॥ २२॥

**नारदः**— किं ते भूयः प्रियं करोमि।

**नायकः**—

गाढं मानमपास्य मे हितकरः सर्वोऽपि देवीगणः
कन्यारत्नमिदं मनोहरगुणे देवीपदे स्थापितम्।
कर्तव्येषु हिताहितेषु भगवान् प्रीत्या प्रशास्त्यन्वहं
तत् पूर्णानि ममेप्सितानि हि भवद्भूते भविष्यन्ति च॥२३॥

तथाचेदमस्तु भरतवाक्यम्—

कल्याणमस्तु जगतां सततं त्रयाणां
संवर्धितो भवतु वैदिक एव मार्गः।
सारस्वतानि सरसानि कवीश्वराणां
मात्सर्यदिग्धहृदया न कलङ्कयन्तु॥ २४॥

[इति निष्क्रान्ताः सर्वे।]

चतुर्थोऽङ्कः।

---

पूर्णेयं शिङ्गभूपेन ग्रथिता मधुजल्पितैः।
रत्नपाञ्चालिका नाम नाटिका रसपेटिका॥

शुभं भूयात्॥

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | Rs. | As. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnanaprabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampurān. | 2 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | Rs. | As. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 8 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭa Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kāḷidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*) | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kāḷidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhūka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Śaṅkara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama (*out of stock*). | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyakaraṇa) by Nīlakaṇṭa Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | |
| No. 48—सिद्धान्तसिद्धाञ्जनम् Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Siṅga Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavicara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikrama-varman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayaca-ndrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | | RS. | AS. | P. |
|---|---|---|---|---|
| No. 59— | **नागानन्दम् Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60— | **लघुस्तुतिः Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61— | **सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62— | **सर्वमतसंग्रहः Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63— | **किरातार्जुनीयम् Kiratarjuniya** (Kâvya) by Bhâravî with the commentary Śabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64— | **मेघसन्देशः Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanâtha. | 0 | 12 | 0 |
| No. 65— | **मयमतम् Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66— | **महार्थमञ्जरी Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67— | **तन्त्रसमुच्चयः Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68— | **तत्त्वप्रकाशः Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumâra | 1 | 12 | 0 |
| No. 69— | **ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśâṇaśivagurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70— | **आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bālakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Saṅgīta) of Saṅgītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrī Vidyācakravartin and Sâhityacûdâmaṇi of Bhaṭṭagopāla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Saṅgīta) of Mataṅgamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, the 1st Adhyāya in the 1st Aṣṭaka). | 1 | 8 | 0 |
| 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with the Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra. (Part II ) | 2 | 8 | 0 |
| 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** (Mīmāṃsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6–10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatiya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇa Bhatta with commentary (Part I.) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 83—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |
| No. 84—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—**विष्णुसंहिता Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—**भरतचरितम् Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—**सङ्गीतसमयसारः Sangitasamayasara** (Saṅgīta) of Saṅgītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—**काव्यप्रकाशः Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrī Vidyācakravartin and Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—**स्फोटसिद्धिः Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—**मीमांसाश्लोकवार्त्तिकम् Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—**होराशास्त्रम् Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—**रसोपनिषत् Rasopanisat.** | 2 | 0 | 0 |
| No. 93—**वेदान्तपरिभाषा Vedantaparibhasa** (Vedanta) of Dharmarājādhvarindra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—**बृहद्देशी Brihaddesi** (Saṅgīta) of Mataṅgamuni. | 1 | 8 | 0 |
| No. 95—**रणदीपिका Ranadipika** (Jyotiṣa) of **Kumāragaṇaka.** | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, the 1st Adhyāya in the 1st Aṣṭaka). | 1 | 8 | 0 |
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with the Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra. (Part II ) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** (Mīmāṃsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6–10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatiya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddhaśrīkaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇa Bhatta with commentary (Part I.) | 1 | 0 | 0 |

| | | Rs. | As. | P. |
|---|---|---|---|---|
| No. 132—तन्त्रोपाख्यानम् | **Tantropakhyana** (Kāvya) | 0 | 6 | 0 |
| No. 133—उदयवर्मचरितम् | **Udayavarmacarita.** | 0 | 4 | 0 |
| No. 134—योगयाज्ञवल्क्यम् | **Yogayajnavalkya** | 0 | 4 | 0 |
| No. 135—सर्वदर्शनकौमुदी | **Sarvadarsanakaumudi** by Mādhavasarasvatī. | 1 | 0 | 0 |
| No. 136—हरमेखला | **Haramekhala** of Māhuka with commentary (Part II Chapter 5) | 0 | 8 | 0 |
| No. 137—स्कान्दशारीरकम् | **Skandasariraka** with commentary. | 2 | 4 | 0 |
| No. 138—आश्वलायनगृह्यमन्त्रव्याख्या | **Asvalayana-grhyamantravyakhya** of Hara-dattamiśra. | 2 | 8 | 0 |
| No. 139—प्रक्रियासर्वस्वम् | **Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇabhaṭṭa with the commentary of K. Sāmba-śiva Śāstrī (Part II). | 0 | 12 | 0 |
| No. 140—सरस्वतीकण्ठाभरणम् | **Sarasvatikantha-bharana** (Vyākaraṇa) by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha (Part III). | 1 | 8 | 0 |
| No. 141—सूक्तिरत्नहार: | **Suktiratnahara.** | 2 | 0 | 0 |
| No. 142—वास्तुविद्या (सव्याख्या) | **Vastuvidya** (Śilpa) with the commentary of K. Mahādeva Śāstrī. | 1 | 4 | 0 |
| No. 143—पाशुपतसूत्रम् | **Pasupatasutra** with Pancharathabhashya of Kaundinya. | 2 | 0 | 0 |
| No. 144—आग्निवेश्यगृह्यसूत्रम् | **Agnivesyagrhyasutra** | 2 | 0 | 0 |
| No. 145—कुवलयावली | **Kuvalayavali** (Drama) by Singabhupala. | 1 | 8 | 0 |

***Apply to:—***

*The Superintendent,*
*Government Press,*
*Trivandrum.*